# नीतिशतकम्

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥१॥

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये, स्वानुभूत्येकमानाय, शान्ताय तेजसे नमः ।

दिक् — दिशा । कालः — भूतकालः, भविष्यत्कालः वर्तमानकालश्च । दिशश्च कालाश्च आदौ येषां ते दिक्कालादयः । आदिशब्देन गुणादयः, घटपटादिकं वस्तुजातम् आकाशादिकं च गृह्यन्ते । अनवच्छिन्ना — अपरिमिता, असङ्कुचिता । अनन्ता — अविनाशिनी । चिद् एव चिन्मात्रम् — ज्ञानमयी । मूर्तिः — स्वरूपम् । दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये—दिक्कालादिभिः अनवच्छिन्ना, अनन्ता चिद् एव मूर्तिः यस्य तस्मै । स्वस्य अनुभूतिः (अनुभवः) स्वानुभूतिः एव एकं मानं (प्रमाणम्) यस्य तस्मै = स्वानुभूत्येकमानाय, स्वानुभवगम्याय । तेजसे — प्रकाशरूपाय [परब्रह्मणे] ।

नमः । कस्मै ? तेजसे । कीदृशं तेजः ? शान्तम्, स्वानुभूत्येकप्रमाणम्, दिक्कालादिभिः अनवच्छिन्नम्, अनन्तम्, चिन्मात्ररूपम् । अनुष्टुप् छन्दः ।

यां चिन्तयामि सततं मयि सा विरक्ता
साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ।
अस्मत्कृते च परिशुष्यति काचिदन्या
धिक् तां च तं च मदनं च इमां च मां च ॥२॥

[अहं] यां सततं चिन्तयामि सा मयि विरक्ता (न अनुरक्ता) ।

अपि (अपि च) सा अन्यं जनम् इच्छति। सः जनः अन्यसक्तः (अन्यस्यां रमण्याम् आसक्तः)। काचित् अन्या अस्मत्कृते (मदर्थम्) परिशुष्यति (प्रेमाग्निना स्वतनुलतां दहति, क्षीणशुष्कदेहा भवति)। ताम् (मत्पत्नीम्), तम् (तस्याः प्रेमिकम्), मदनम् (कामदेवम्), इमाम् (एनां मयि अनुरक्ताम्) मां च धिक्। वसन्ततिलका छन्दः।

तत्र इयं किंवदन्ती श्रूयते—एकदा कोऽपि सन्न्यासी अस्य श्लोकस्य लेखकाय राज्ञे भर्तृहरये जरामृत्युहरं फलमेकम् उपाहरत्। पत्नीपरायणः राजा भर्तृहरिः स्वप्रियतमायै तत् अयच्छत्। अन्यपुरुषासक्ता सा तत् स्वप्रेमिकाय आर्पयत्। सः प्रेमिकः अन्यस्यां रमण्याम् अनुरक्तः आसीत्। स तस्यै अददात्। सा प्रजानुरञ्जके, गुणवति भर्तृहरौ प्रीयते स्म। अतः तस्य दीर्घायुष्यं कामयमाना सा तस्मै तत् उपाहरत्। इत्थं स्वप्राणवल्लभायै राज्ञ्यै प्रदत्तं फलम् अन्यस्याः रमण्याः हस्तात् प्राप्य राजा स्वप्राणप्रियायाः गुप्तप्रणयरहस्यम् अजानात्। अथ तस्मिन् वैराग्यम् उदितम्। स स्वभ्रात्रे राज्यभारं दत्त्वा वनाय प्रस्थितः। तेनैव महामतिना संस्कृतसाहित्यभाण्डारे रत्नायमानं शतकत्रयं रचितम्—नीतिशतकम्, वैराग्यशतकम्, शृङ्गारशतकम् इति। केचित् विज्ञानशतकमपि तस्य रचनासु गणयन्ति।

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥३॥

अज्ञः (मूर्खः) सुखम् (सुखेन, अनायासम्) आराध्यः (आराधयितुम्, प्रसादयितुम्, बोधयितुं शक्यः)। विशेषज्ञः (अधिकज्ञानशाली जनः) सुखतरम् (अधिकसौकर्येण, ततोऽपि सुखेन)

आराध्यते। [किन्तु] ज्ञानलवदुर्विदग्धं (ज्ञानस्य लवेन कणिकया दुर्विदग्धम्, दुर्विनीतम्, धृष्टं) नरं ब्रह्मा अपि न रञ्जयति (न प्रसादयति, प्रसन्नं कर्तुं न शक्नोति)। आर्या छन्दः।

प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्रान्तरात्
समुद्रमपि सन्तरेत् प्रचलदूर्मिमालाकुलम्।
भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥४॥

[जनः] मकरवक्त्रदंष्ट्रान्तरात् प्रसह्य (हठात्, बलेन) मणिम् उद्धरेत्, प्रचलदूर्मिमालाकुलं समुद्रम् अपि सन्तरेत्, कोपितं भुजङ्गम् अपि पुष्पवत् शिरसि धारयेत्, प्रतिनिविष्ट-मूर्खजनचित्तं तु न आराधयेत्।

कुम्भीरमुखस्य दन्तमध्यात् बलपूर्वकं रत्नस्य बहिर्निष्कासनम्, प्रबलतरङ्गाकुलसमुद्रे सन्तरणम्, मस्तके पुष्पवत् सर्पस्य धारणम् इति एतत् दुष्करम् अपि कार्यं कोऽपि साहसी जनः कर्तुं शक्नुयात्। किन्तु दुराग्रहि-मूर्खजनस्य चित्तरञ्जनं खलु दुःसाध्यम्। मूढस्य, हठिजनस्य हृदयपरिवर्तनम् अतीव कठिनम्, असम्भवप्रायम्। पृथ्वी वृत्तम्।

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः।
कदाचिदपि पर्यटञ्छशविषाणमासादयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥५॥

[जनः] यत्नतः पीडयन् सिकतासु अपि तैलं लभेत, पिपासार्दितः च मृगतृष्णिकासु सलिलं पिबेत्, पर्यटन् कदाचित् शशविषाणम् अपि आसादयेत्, प्रतिनिविष्ट-मूर्खजनचित्तं तु न आराधयेत्।

सिकता—बालुका। पिपासार्दितः—तृषाकुलः। मृगतृष्णा—मरीचिका। सलिलम्—जलम्। पर्यटन्—इतस्ततः भ्रमन्। शशविषाणम्—शशकस्य शृङ्गम्। आसादयेत्—प्राप्नुयात्। न आराधयेत्—सन्तोषयितुं न प्रभवेत्।

बालुकाभ्यः तैलम्, मरुस्थले जलम्, शशकस्य शृङ्गम् इति एतत् असम्भवम् अपि कदाचित् दैवयोगेन सम्भवेत्, किन्तु हठपरायण-मूर्खजनस्य मनोरञ्जनं कदापि न सम्भवति। पृथ्वी वृत्तम्।

पूर्वश्लोके मूर्खजनस्य हृदयपरिवर्तनम् अतीव कठिनम्, असम्भव-प्रायम् इति कथितम्। अस्मिन् श्लोके असम्भव-वस्तुभिः सह तस्य तुलनया तत् सर्वथा असम्भवम् इति निर्दिष्टम्।

व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते
छेत्तुं वज्रमणिं शिरीषकुसुमप्रान्तेन सन्नह्यति।
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते
नेतुं वाञ्छति यः खलान् पथि सतां सूक्तैः सुधास्यन्दिभिः ॥६॥

यः सुधास्यन्दिभिः सूक्तैः खलान् सतां पथि नेतुं वाञ्छति, असौ बालमृणालतन्तुभिः व्यालं रोद्धुं समुज्जृम्भते, शिरीषकुसुमप्रान्तेन वज्रमणिं छेत्तुं सन्नह्यति, मधुबिन्दुना क्षाराम्बुधेः माधुर्यं रचयितुम् ईहते।

सुधास्यन्दिभिः—अमृतस्राविभिः। सूक्तैः—उत्तमवचनैः। खलान्—दुष्टान्। सताम्—सज्जनानाम्। पथि—मार्गे। बाल-मृणालतन्तुभिः—कोमलपद्मनालैः। व्यालम्—हस्तिनम्। समु-ज्जृम्भते—चेष्टते। शिरीषकुसुमप्रान्तेन—शिरीषपुष्पस्य अग्रभागेन।